No. 7.]

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. OXON.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# VIVARAṆAPRAMEYASAṂGRAHA

OF

(MÂDHAVÂCHÂRYA)

VIDYÂRAṆYA

EDITED BY

RÂMAŚÂSTRÎ TAILAṄGA

ASSISTANT PROFESSOR, SANSKRIT COLLEGE, BENARES.

VOL. V.

SANSKRIT TEXT.






PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:

TAYESTHARAM MUKUNDJI AND CO., BOMBAY:

OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:

LUZAC AND CO., LONDON.

1893.

# विवरणप्रमेयसंग्रहः

Vivaraṇa prameya saṃgrahaḥ

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपूज्य-
पादविद्यारण्यमुनिप्रणीतः ।

Madhava, son of Mayana, called Vidyaranya



काशीस्थराजकीयप्रधानसंस्कृतपाठालये साहित्य-
शास्त्राध्यापकेन मानवल्ल्युपाख्यतैलङ्ग-
रामशास्त्रिणा संशोधितः ।

---



काश्याम्

मेडिकल्हाल्-नाम्नि यन्त्रालये मुद्रितः ।

सन् १८९३ ईस्वी । शुभम् ॥

॥ श्रीः ॥

# भूमिका ।

अथ तावदारभ्यते निखिलवेदान्तार्थप्रकाशनपरः प्राचीनविविधदुर्वादिमतोपमर्दनपरो ऽपि प्राञ्जलतया सुबोधो विवरणोक्तविषयाणां वैशद्येन बोधको विवरणप्रमेयसंग्रहनामको ग्रन्थो मुद्रयित्वा प्रकाशयितुम् ।

अस्य किल प्रणेता पूर्वाश्रमे माधवाचार्यनाम्ना माधवामात्यनाम्ना वा प्रसिद्धो विद्यारण्यमुनिरिति निश्चीयते । तथा हि । पञ्चदशीग्रन्थारम्भे निजगुरोः शङ्करानन्दस्य 'नमः श्रीशङ्करानन्दगुरुपादाम्बुजन्मने' इति यथा नतिर्विहिता तथैवात्रापि 'श्रीशङ्करानन्दपदं हृदब्जे विभ्राजते तद्यतयो विशन्ति' इति मङ्गलाचरणं दृश्यते । किं च वेदभाष्यारम्भे—

यस्य निःश्वसितं वेदा यो वेदेभ्यो ऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

इति विद्यातीर्थनतिरुपलभ्यते । एवमत्र ग्रन्थान्ते—

यद्विद्यातीर्थगुरवे शुश्रूषाऽन्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुता श्रीविद्यातीर्थपादयोः सेवा ॥

इति विद्यातीर्थाय ग्रन्थसमर्पणमुपलभ्यते । अयं च विद्यातीर्थयतिर्भारतीतीर्थयतेर्गुरुरासीदिति

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
वैयासिकन्यायमाला श्लोकैः संगृह्यते स्फुटम् ॥

इति वेदान्ताधिकरणमालादौ भारतीतीर्थकृतमङ्गलाचरणात् प्रतीयते । भारतीतीर्थयतिश्च विद्यारण्यगुरुरिति

स भव्याद् भारतीतीर्थयतीन्द्रचतुराननात् ।
कृपामव्याहतां लब्ध्वा पराध्यप्रतिमो ऽभवत् ॥

इति जैमिनीयन्यायमालाविस्तरारम्भे ७ श्लोकदर्शनादवसीयते ।

एवं च विद्यारण्यगुरुर्भारतीतीर्थस्तस्य च गुरुर्विद्यातीर्थ इति विद्यारण्यस्य परमगुरुर्विद्यातीर्थ इति सिध्यति । प्रथमतो विद्यातीर्थाद् विद्यामधिगम्य ब्रह्मभूयं गते तस्मिन् तच्छिष्याद् भारतीतीर्थादयं विद्यामधिगतवान्वेति कल्पने विद्यातीर्थो ऽस्य साक्षाद्गुरुरपि * सिध्यति । गुरुः परमगुरुर्वा भवतु विद्यातीर्थो ऽस्य परमाराध्य आसीदित्यत्र तु न विवादावसरः । तथा चैतद्ग्रन्थे ग्रन्थान्तरवद् विद्यातीर्थादरकरणाद् विद्यारण्यकृतत्वमस्य पर्यवस्यति । तथा सर्वदर्शनसंग्रहग्रन्थान्ते "सर्वदर्शनशिरोमणिभूतं शाङ्करदर्शनमन्यत्र निरूपितमित्यत्रोपेक्षित" मिति लेखदर्शनात् पञ्चदश्यादिग्रन्थानां शाङ्करदर्शनसारमात्रत्वादयमेव स ग्रन्थ इति प्रतीयते । अत एव च सर्वदर्शनसंग्रह एतद्ग्रन्थरचनोत्तरं निर्मित इत्यपि शक्यते कल्पयितुम् । किं चैतद्ग्रन्थे ऽध्ययनविधेर्नित्यत्वादिविचारे यादृशाक्काराः पङ्क्तय उपलभ्यन्ते तादृश्य एव पराशरमाधवग्रन्थे ऽप्युपलभ्यन्ते । एतदपि ग्रन्थद्वयस्य समानकर्तृकत्वं प्रकटयति । अपि च काशिकराजकीयसंस्कृतपाठालयस्थपुस्तकालयपुस्तके प्रतिवर्णकमन्ते 'विद्यारण्यमुनिविरचिते' इति प्राचीनो लेखो ऽपि प्रकृतमर्थमुपोद्बलयति । एवं चेदानीं प्रकृतो ग्रन्थो विद्यारण्यमुनिप्रणीत इत्यत्र विवादास्पदमंशो नावशिष्यते ।

अयं च विद्यारण्यमुनिः पूर्वाश्रमे माधवाचार्यनाम्ना प्रसिद्धिं गत इति तु लोके प्रसिद्धमेव । अस्य च पिता मायणो, जननी श्रीमती, सोदरभ्रातरौ सायणभोगनाथौ, सूत्रं बौधायनं भारद्वाजं गोत्रं याजुषी च शाखेति

श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥
बौधायनं यस्य सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं यस्य गोत्रं सर्वज्ञः स हि माधवः ॥

इति पराशरमाधवीयारम्भश्लोकाभ्यां निश्चीयते ।

एवं काव्यमालान्तर्गतप्राचीनलेखमालायां ४४ लेखे विजयभूपतिवीरबुक्कनृपतिपौत्रः १३३८ शके (1416 A. D.) हम्पणार्याय चेट्टुपेटाख्यं ग्रामं

* एवं चास्य विद्यातीर्थो भारतीतीर्थः शङ्करानन्दश्च गुरुरिति न काप्यव्यवस्था ।

प्रददावित्यर्थके विजयभूपतेः १३३८ शके स्थित्यवगमात् तत्पितामहस्य वीरबुक्कनृपतेः स्थितिसमयः १३ शकाभ्यन्तरे सिध्यति। अत एव तन्मन्त्रिणो माधवाचार्यस्यापि १३ शकाभ्यन्तरे एव जन्मकालः सिध्यति *। एवं ताम्रपत्रे १३१३ प्रजापतिनामसंवत्सरे वैशाखकृष्णपक्षे अमायां सूर्यग्रहणे वैदिकमार्गप्रवर्तकश्रीमन्माधवाचार्येण कुच्चरसंज्ञकग्रामस्य स्वनाम्ना माधवपुरमिति नाम निधाय चतुर्विंशतिसंख्येभ्यो ब्राह्मणेभ्य उदकपूर्वकं दत्तमिति लेखदर्शनादपि पूर्वोक्तशकाभ्यन्तरेऽस्य जन्मेति स्थिरीभवति †। अयं वीरबुक्कमहीपतिमन्त्री सन् कियन्तमपि कालं राजाज्ञया जयन्तीपुरे राज्यमकरोत्तस्मिन्नेव च समये गोवानामिकां कोङ्कणराजधानीं जित्वा यवननृपैरुन्मूलितानां सप्तनाथादिदेवानां प्रतिष्ठामकरोदित्यादि च ज्ञायते ‡। अयं च पूर्वाश्रमे राजकार्यधुरन्धरो भूत्वाऽनितरसाध्यनानाविधप्रबन्धरचनैर्वेदशास्त्राणि प्रतिष्ठाप्य संसाराद्विरक्तस्तुर्यमाश्रमं परिगृह्य विद्यारण्यनाम्ना प्रसिद्धः शृङ्गेरीमठे श्रीमद्भगवत्पादशङ्कराचार्यपट्टमवापेत्यपि तन्मठस्थाचार्यपरम्परालेखाद्विनिश्चेतुं शक्यम्। अस्य च कुलनाम सायण इत्यासीदिति

श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा।
क्रियते माधवार्येण सर्वदर्शनसंग्रहः॥

इति सर्वदर्शनसंग्रहारम्भे श्लोकदर्शनाद्, माधवीयधातुवृत्त्यादिमश्लोकेषु—

'अस्ति श्रीसंगमक्ष्मापः पृथ्वीतलपुरन्दरः'।
'तस्य मन्त्रिशिखारत्नमस्ति मायणसायणः'।

इति पितुर्मायणस्यापि सायणत्वेनोल्लेखादवगम्यते। अस्य भ्राता सायणाचार्यश्च कुलनाम्नैव प्रसिद्धिं गत इति 'सायणो भोगनाथश्चे'ति पाराशरव्याख्यादौ दर्शनात्, तैत्तिरीयसंहिताभाष्ये कलिकाताराजधान्याम् १८६० ई० वर्षे मुद्रिते पाठभेदेषु 'अदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने'

---

* जैमिनीयन्यायमालाविस्तरस्यानन्दाश्रमपुस्तकावलीमुद्रितस्य भूमिकायां ४–५ पृष्ठे द्रष्टव्ये।

† आनन्दाश्रममुद्रितरुद्रभाष्यस्य भूमिकायां ३ पृ॰ द्रष्टव्यम्।

‡ आनन्दाश्रममुद्रितरुद्रभाष्यभूमिकायां ३ पृ॰ द्रष्टव्यम्।

इत्येतदुत्तरं 'स ह्याह नृपतिं राजन् सायणार्यो ममानुजः' इत्यादिदर्शनाच्च कल्प्यते । अत एव केषु चिद् ग्रन्थेषु 'सायणमाधवीये' इत्यादिलेखे संगच्छते कुलनाम्ना निर्देशः । यत्र च "सायणाचार्यविरचिते माधवीये" इति लेखो दृश्यते तत्र माधवाज्ञया सायणाचार्यविरचिते इत्यर्थेन न कोपि दोषः । प्रसिद्धिश्च कुलनाम्ना तद्भ्रातुर्नाश्चर्यास्पदम् । अद्यत्वे ऽपि केषां चित्कुलनाम्ना देशनाम्ना वा प्रसिद्धेरुपलम्भात् । यथा भांडारकर, आप्टे, इत्यादिदाक्षिणात्येषु, पाठकजी शुकुलजी इत्यादि गौडेषु, यथा वा ह्वाइट् इत्यादि पाश्चात्त्येषु । अलमधुना प्रसक्तानुप्रसक्त्या प्रकृतमनुसरामः ।

तदनेन महानुभावेन प्रणीतो ऽयं ग्रन्थः कीदृश इत्यत्र ग्रन्थकृन्नामैव निर्णयायालमिति नास्त्यत्र विशेषवर्णनापेक्षा । अस्य किल ग्रन्थस्य नाम

भाष्यटीकाविवरणं तन्निबन्धनसंग्रहः ।
व्याख्यानव्याख्येयभावक्लेशहानाय रच्यते ॥

इति ग्रन्थकर्तृप्रतिज्ञाश्लोकात्, तदनुसारेण प्रतिवर्णकमादर्शपुस्तकेषु विवरणप्रमेयसंग्रहे इति लेखदर्शनाच्च विवरणप्रमेयसंग्रह इति प्रतीयते । क्व चित् पुस्तके विवरणोपन्यास इत्यपि दृश्यते तदेतन्नामान्तरं स्यादिति शक्यं सम्भावयितुम् ।

अस्मिंश्च ग्रन्थे प्रतिपाद्यविषयाणामकारादिक्रमेण सूचीपत्रं पृथग् विस्तरेण निर्मितमस्ति तथापि आपाततस्तज्जिज्ञासूनामुपकाराय संक्षेपतस्ते प्रदर्श्यन्ते ।

तत्र तावदस्मिन् ग्रन्थे प्रथमसूत्रे चत्वारि वर्णकानि, द्वितीये एकं, तृतीये द्वे, चतुर्थे द्वे, इत्येवं संकलनया नव वर्णकानि । तत्र प्रथमे वर्णके–प्रथमतः श्रवणस्य विधित्वं व्यवस्थाप्य ब्रह्मविचारस्य कर्तव्यत्वोपपादनपुरस्सरमध्यासस्य सूत्रसूचितत्वं युक्तिसिद्धत्वं चोपपाद्य भावरूपाज्ञानस्याध्यासोपादानत्वोक्तिपुरस्सरमज्ञानस्य भावरूपत्वं संसाध्याध्यासं लक्षयित्वा तत्र मतान्तराणि प्रदर्श्य तांश्च निराकृत्याऽधिष्ठानस्य सद्रूपतामुक्त्वाऽविद्याया अनादित्वं स्थिरीकृत्याऽऽत्मनः स्वप्रकाशानुभवरूपत्वं समुपपाद्याहङ्कारस्येदमनिदमात्मकत्वं व्यवस्थाप्य ब्रह्मणो निष्प्रपञ्चत्वं प्रतिष्ठाप्याऽ-

ध्यासनिवृत्तेः परम्परया शास्त्रप्रयोजनत्वं प्रदर्श्य वेदान्तविचारशास्त्रस्य ब्रह्म विषयो ऽनर्थनिवृत्तिः फलमिति स्थिरीकृत्य विषयप्रयोजनसद्भावाच्छास्त्रारम्भः करणीय इति सनिर्भरमुपपादनं प्रसङ्गागता अन्येपि बहवो विषयाः प्रतिपादिताः ।

द्वितीये तु वर्णके पूर्वतन्त्रोक्तान् विषयान् संक्षेपतः प्रदर्श्य पूर्वतन्त्रेणागतार्थत्वाद् ब्रह्मविचारस्य कर्तव्यत्वं व्यवस्थाप्य ब्रह्मजिज्ञासासूत्रतात्पर्यविधिविषये विपुलं विचारं कृत्वा पूर्वतन्त्रस्य धर्ममात्रविचारपरत्वमुपपाद्य तेनागतार्थत्वाद् ब्रह्मविचारशास्त्रमारम्भणीयमिति सिद्धान्तः ।

तृतीयवर्णके हि सूत्रगतपदव्याख्यामुखेन शास्त्रारम्भदृढीकरणाय पदार्थविचारं प्रतिज्ञाय तन्निरूपणावसरे ऽध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वमुपनयनस्य नित्यत्वनिरूपणपुरस्सरं तदङ्गस्याध्ययनस्यापि नित्यत्वमुपपाद्याथशब्दस्यानन्तर्यार्थकत्वमधिकारिसमर्पकत्वं चाभिधाय सत्यां विरक्तौ सकलाश्रमकर्माधिकृताऽनधिकृतसाधारण्येन संन्यासं व्यवस्थाप्य ब्रह्मविचाराधिकारिणो निरूप्यातःशब्दस्य हेत्वर्थत्वं जिज्ञासाशब्दस्य विचारलक्षकत्वं चाख्याय संबन्धविषयप्रयोजनसद्भावाद् ब्रह्मविचारशास्त्रमारम्भणीयमिति परान् बहून् विषयान् गर्भीकृत्योपसंहारः ।

चतुर्थे ऽपि वर्णके पूर्ववर्णकोक्तानां संबन्धविषयफलानामाक्षेपपूर्वकं साधनं प्रतिज्ञाय विचारविषयस्य ब्रह्मण आत्मरूपत्वेन प्रसिद्धिं प्रदर्श्य देहाद्यात्मवादिमतनिरासपुरस्सरमात्मनो जडादिरूपतां निरस्येश्वरस्यैवात्मरूपत्वमुक्त्वा ऽऽत्मनो विपरीतरूपेण ज्ञाने प्रत्यवायं दुर्लोकप्राप्तिं चाभिधाय ब्रह्मज्ञानेन तत्त्वज्ञाननिष्पत्तौ मोक्षरूपफलस्य सत्त्वाद् ब्रह्मविचारः कर्तव्य इति राद्धान्तः ।

अथ पञ्चमे वर्णके द्वितीयसूत्रं ब्रह्मलक्षणत्वेनावतार्य सूत्रगतस्यास्येत्यस्य यत इत्यस्य च पदस्य जगत्कारणपरत्वं यथाक्रममुपन्यस्य ब्रह्मणि प्रपञ्चनिरूपितं निमित्तकारणत्वमुपादानकारणत्वं च स्थिरीकृत्य नानावादिमतेन प्रपञ्चविभागं निरूप्य स्वमते तस्य नामरूपात्मकत्वमुक्त्वा ब्रह्मणः स्वरूपलक्षणं तटस्थलक्षणं चोपन्यस्य तस्य परिणामं निरूप्य माया-

पदार्थं निर्दिश्य मायाया मायाविशिष्टब्रह्मण एव वा मतभेदेन प्रपञ्चोपादानत्वमुक्त्वा स्वभाववादं निराकृत्य सत्यं ज्ञानमित्यादिश्रुतीनां ब्रह्मस्वरूपप्रतिपादकत्वं प्रतिष्ठाप्य विज्ञानस्वभावानन्दस्वरूपरूपतटस्थलक्षणसमन्वयो ब्रह्मणीत्युपसंहारः ।

षष्ठेऽथ वर्णके तृतीयसूत्रे ब्रह्मणः सर्वज्ञत्वे हेतुरुच्यते इति तदवतार्य वेदानां पौरुषेयत्वनिरासेनापौरुषेयत्वं स्वतः प्रामाण्यं च व्यवस्थाप्य सर्ववेदोपादानतया ब्रह्मणः सर्वज्ञत्वसाधनम् ।

सप्तमे च वर्णके 'द्वितीयसूत्रे लक्षणमभिधायानेन सूत्रेण प्रमाणं प्रतिज्ञायते इति पक्षान्तरमुपन्यस्य जगज्जन्मादिनिमित्तोपादानकारणस्य ब्रह्मणः शास्त्रैकसमधिगम्यत्वं द्वितीयतृतीयसूत्राभ्यां सिद्धमिति सिद्धान्तः ।

अथाष्टमे वर्णके वेदान्तानां ब्रह्मणि न प्रामाण्यमित्याक्षेपे सूत्रं चतुर्थमवतार्य वेदान्तानामखण्डैकरसब्रह्मप्रतिपादकत्वं संसाध्य वैदिकवाक्यानां स्वतः प्रामाण्यं निरूप्य वेदान्तानां विधिपरत्वं निराकृत्य ब्रह्मण्येव प्रामाण्योपपादनम् ।

नवमे किल वर्णके गुरुमतेन वेदान्तानां कार्यशेषतया ब्रह्मप्रतिपादकत्वमाशङ्क्य विधेयनियोगयोरशक्यनिरूपणत्वात्तन्निरस्य जीवब्रह्मणोरैक्यमुपपाद्य भेदाभेदवादिमतमुपमर्द्य ज्ञानस्य क्रियातो वैलक्षण्यं प्रदर्श्य शरीरसंबन्धस्याविद्याकृतत्वं तत्त्वज्ञाननिवर्त्यत्वं चोपपाद्य विध्यसंभवाद् ब्रह्मण्येव वेदान्तसमन्वयसिद्धान्तः । प्रतिवर्णकं प्रसङ्गायाता अन्येऽपि विषयाः सूचीपत्रात् संक्षेपेणाकलय्य ग्रन्थाज् ज्ञातव्याः ॥

सोऽयमुत्तमोत्तमो ग्रन्थः परमादरणीयोऽप्यद्यत्वे द्वित्राणामपि पुस्तकानां दुर्लभतया वञ्चयतीव पीडयतीव च रसिकजनचेतांसीति तत्सौलभ्याय तत्प्रकाशने प्रवृत्तिः कथंकारं श्लाघ्यतमा न भवेत् प्रकाशकमहाशयानाम् । मुद्रणावसरे च तत्संशोधनायादिष्टोऽहमर्वाचीनलिपिलिखितप्रथमवर्णकं प्राचीनमेकं पुस्तकं,* द्वितीयं च काशिकराजकीयसंस्कृतपुस्तकाल-

* इदं च पुस्तकमतिदुर्लभं महता परिश्रमेण काशीस्थराजकीयसंस्कृतपुस्तकालयाध्यक्षपण्डितविन्ध्येश्वरीप्रसादद्विवेदिसंकलितम् । एतदन्ते 'संवत् १५७१ वर्षे श्रावणसुदि रवौ अद्येहश्रीनगरे महारायाधिराय श्रीउदिसिंहविजयराज्ये' इति लिखितमस्ति ।

यस्यं शुद्धप्रायं प्राचीनं मध्ये मध्ये खण्डितमाद्यन्तखण्डितं च, तृतीयं च प्रथमवर्णकहीनं शुद्धतमं प्राचीनमन्तिमपत्रविकलं * चेति पुस्तकत्रयमादर्शत्वे नावलम्ब्य निवेश्याधस्तत्तत्पुस्तके समुपलब्धान् पाठभेदान्, ग्रन्थमध्ये ग्रन्थान्तरसंवादस्थले तदाकरान् प्रायशः समुपलब्धान् प्रदर्श्य टिप्पणीरूपेण, महता परिश्रमेण संशोध्य मुद्रणावसरे ऽन्तिमपत्रं मद्भ्रातृचरणमहामहोपाध्याय श्री ६ गङ्गाधरशास्त्रिभ्यः प्रदर्श्य तत्संमत्या समसुद्रयममुं ग्रन्थम् । मुद्रणोत्तरमपि पुनर्निर्ध्याय समुपलब्धा अशुद्धीः परिशोध्य समसाधयं शुद्धिपत्रं, प्रादर्शयं च ग्रन्थोक्तान् विषयान्वर्णक्रमेण पृथङ्मुद्रिते सूचीपत्रे ।

तदेवं महता ऽऽयासेन सावधानं संशोधिते ऽप्यस्मिन् पुस्तके यदि मदीयमतेरपाटवेन दृग्दोषेणाक्षरयोजकादिदोषेण वा क्वचिन्नयनगोचरीभवेयुश्चेत् स्खलितानि तर्हि तानि सदयं मर्षयित्वा प्राथमिके ऽस्मिन् मुद्रणे गुणदृष्टिमेव पुरोधाय समनुभवन्तु वेदान्तपयोधिसमुद्भूतं परमानन्दसुधाधारारसं रसिकवरा इति सप्रश्रयमभ्यर्थये बुधवरान् याचे च जगदीश्वरं मदीयं परिश्रमं फलेग्रहिं विधातुमिति । शुभम् ।

आश्विनसुदि १० शनौ संवत् १९४९ ॥ } काशिकराजकीयप्रधानसंस्कृतपाठशालायां साहित्यशास्त्राध्यापको मानवल्ल्युपाख्यतैलङ्गरामशास्त्री ।



* इदमपि पूर्वोक्तपण्डितोद्योगलब्धम् ।

# शुद्धिपत्त्रम् ।

| पृ॰ | प॰ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ७ | १२ | ब्रह्मज्ञा निर्देशात् | ब्रह्मज्ञाननिर्देशात् |
| ८ | २० | ुद्धौ * | बुद्धौ |
| २६ | ११ | स्थलादापच्यूंन* | स्थलादीपच्यून- |
| २७ | १६ | अन्यथाशुक्तिं | अन्यथा शुक्तिं |
| ३० | ११ | स्मतेरेन्यो | स्मतेरन्यो |
| ३० | १२-१३ | भेदकजनकत्वं | भेदजनकत्वं |
| ३२ | १६ | स्मति र्ज्ञा॰ * | स्मतिर्ज्ञा- |
| ३२ | २४ | द्वयो र्ग्रह्य- * | द्वयोर्ग्रह्य- |
| ३६ | २४ | तद्ज्ञान | तज्ज्ञान- |
| ३८ | २२ | प्रवृत्ति | प्रवृत्ति- |
| ४४ | ‡ टि॰ | अन्तः करण | अन्तःकरण- |
| ५२ | २० | आकारे | आकार- |
| ६८ | † टि॰ | व्यास सू- | व्याससू- |
| ७१ | २८ | स्वच्छत्वाच्च | स्वच्छत्वाच्चै- |
| ७६ | १ | सिध्यत् * | सिध्येत् |
| ८० | १५ | ज्ञणे | क्षणे |
| ८३ | २५ | प्रवृ ः * | प्रवृत्तेः |
| ८५ | १६ | यौवनयोयाग * | यौवनयोर्योग- |
| ८६ | २० | कारीर्यादभ्यो * | कारीर्यादिभ्यो |
| ९५ | ७ | सम्बध्यत इति | सम्बध्यतइति |
| ९८ | २५ | शुक्तित्त्वा | शुक्तितत्त्वा- |
| १०४ | १५ | अविद्यादिसाद्त | अविद्यादिसाक्षि- |
| १०६ | १७ | वस्यत्यत्र | वस्येत्यत्र |
| १०८ | २० | विचारयित्व्या | विचारयितव्या |
| १०९ | १५ | बोद्धं * | बोद्धुं |
| १११ | ७ | मामांसाऽनर्थक्यात् | मीमांसाऽनर्थक्यात् |
| ११२ | २८ | नित्यप्राप्त- | नित्यप्राप्त- |
| ११३ | १७ | निबृत्तये | निवृत्तये |
| ११८ | ५ | मवबोध्या ऽपि | मवबोध्याऽपि |
| १२३ | १७ | माचितं | मारचितं |
| १२६ | ५ | प्रववृत्ते | प्रववृते |
| १२८ | १८ | पर्यवसायत्व | पर्यवसायित्व |
| १३२ | १७ | श्यनादेः | श्येनादेः |
| १३७ | ७ | निष्पतेः | निष्पत्तेः |
| १३७ | २२ | त्वदाय॰ | त्वदीय॰ |
| १३८ | २७ | अस्मत्पद्त * | अस्मत्पक्षे |
| १४७ | २ | सामर्थ्या- | सामर्थ्या- |
| १५७ | ८ | द्यात्यते | द्योत्यते |
| १५७ | १८ | शब्दन * | शब्देन |
| १६० | १४ | नैमिधि॰ | नैमित्ति॰ |
| १६१ | १८ | विविदपन्तीति | विविदिषन्तीति |
| १६६ | १५ | मक्यतया | मशक्यतया |
| १७७ | ११ | सताहा- | सतोहा- |
| १७४ | १४ | ऽनेतेति | ऽनेनेति |
| १७६ | २८ | तयोार्ववेकः | तयोर्विवेकः |
| १७७ | शिरः (Heading) | यत्वाक्तिः * | यत्वोक्तिः |
| १८३ | १ | ऽऽभ्युपेयः | ऽभ्युपेयः |
| १८३ | १८ | क्रदना * | क्लेदना |
| १८४ | २४ | सात * | सति |
| १८६ | ३ | छिदिक्रियावदि | छिदिक्रियावदिति |
| १८७ | २६ | श्रोत्र शब्द * | श्रोत्रे शब्द- |
| १९५ | २० | जिज्ञास्य | जिज्ञास्ये |
| १९८ | ८ | गोचरत्वनाप्रामाण्यं | गोचरत्वेनाप्रामाण्यं |
| २०४ | § टि॰ | सामञ्जसः | समञ्जसः |
| २०५ | २४ | वयवेष्वेॱ | वयवेष्वेव |
| २१४ | ‡ टि॰ | असङ्गद्व ारे॰ | असङ्गद्वारे॰ |
| २१७ | १८ | श्रात | श्रौत- |
| २२२ | ४ | शङ्कनीवम् | शङ्कनीयम् |
| २२२ | ११ | ब्रह्म | ब्रह्म- |
| २२५ | ८ | व्यपदेश इतीष्ट- | व्यपदेश इति । इष्ट |
| २३६ | १७ | विशेपेस्यापा * | विशेषस्योपा- |
| २५१ | ६ | जन्यसस्कारा * | जन्यसंस्कारा |

पृष्ठ ङ्केषु १३० अङ्कस्थाने २३० प्रमादात् पतितः स १३० ज्ञातव्यः ।

* एतच्चिन्हाङ्किता अशुद्धयो मुद्रणकाले ऽक्षराणां स्खलनादिना केषु चित् ।

# वर्णक्रमानुसारिसूचीपत्रम् ।

* ( ) एतन्मध्ये पुस्तकान्तरधृतः पाठः प्रदर्शितः ।

# विवरणप्रमेयसंग्रहः ।



स्वमात्रयानन्दयदत्र जन्तून्सर्वात्मभावेन तथा परत्र ।
यच्छङ्करानन्दपदं हृदब्जे विभ्राजते तद्यतयो विशन्ति ॥ १ ॥
भाष्यटीकाविवरणं तन्निबन्धनसंग्रहः ।
व्याख्यानव्याख्येयभावक्लेशहानाय रच्यते ॥ २ ॥
नित्यस्वाध्यायविधितो ऽधीत्य वेदान्तमस्य ये ।
संशेरते ऽर्थे ते सूत्रभाष्यादिष्वधिकारिणः ॥ ३ ॥

नित्यो हि स्वाध्यायो ऽध्येतव्य इत्यध्ययनविधिः । ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ऽध्येयो ज्ञेयश्चेति वचनात् । काम्यत्वे हि वेदाध्ययनस्यान्योन्याश्रयता । अर्थावबोधे सति कामना कामनायां सत्यां षडङ्गोपेतवेदाध्ययनप्रवृत्तस्यार्थावबोध इति । अतः सर्वो ऽपि नित्यविधिबलादेव षडङ्गसहितं वेदमधीत्यार्थं जानाति । कश्चित्पुण्यपुञ्जपरिपाकवशान्निरतिशयपुरुषार्थप्रेप्सायां तदुपायं वेदे ऽन्विष्येदमवगच्छति । आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यात्मशेषतयैवान्यस्य सर्वस्य प्रियत्वोक्तेरात्मव्यतिरिक्तात्सर्वस्माद्विरक्तो ऽधिकारी । आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातमित्युपक्रम्यैतावदरे खल्वमृतत्वमित्युपसंहारात्परमपुरुषार्थभूतस्यामृतत्वस्यात्मदर्शनोपायत्वं प्रतिपाद्य दर्शनस्य चापुरुषतन्त्रस्याविधेयत्वादात्मा वा अरे द्रष्टव्य इत्यात्मदर्शनमनूद्य तदुपायत्वेन श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति मननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गि विधीयतइति । ननु षडङ्गोपेतवेदाध्यायिनः सत्यपि वेदार्थावगमे विचारमन्तरेण तात्पर्यानवगमान्न तेनावगतोर्थः श्रुत्यभिप्रेतो भवितुमर्हतीति चेद् मैवम् । एतच्छ्रुतितात्पर्यस्यैव पुराणेषु प्रतिपादितत्वात् । तथा हि ।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
ज्ञात्वा च* सततं ध्येय एते दर्शनहेतवः ॥

---

* मत्वा चेति पाठान्तरम् ।

तत्र तावन्मुनिश्रेष्ठाः श्रवणं नाम केवलम् ।
उपक्रमादिभिर्लिङ्गैः शक्तितात्पर्यनिर्णयः ॥
सर्ववेदान्तवाक्यानामाचार्यमुखतः प्रियात् ।
वाक्यानुग्राहकन्यायशीलनं मननं भवेत् ॥
निदिध्यासनमैकाग्र्यं श्रवणे मनने ऽपि च ।
निदिध्यासनसंज्ञं च मननं च द्वयं बुधाः ॥
फलोपकारकाङ्गं स्या*त्तेनासम्भावना तथा ।
विपरीता च निर्मूलं प्रविनश्यति सत्तमाः † ॥
प्राधान्यं मननादस्मि‡न्निदिध्यासनतो ऽपि च ।
उत्पत्तावन्तरङ्गं हि ज्ञानस्य श्रवणं बुधाः ॥
तटस्थमन्यव्यावृत्त्या मननं चिन्तनं तथा ।
इतिकर्तव्यकोटिस्थाः शान्तिदान्त्यादयः क्रमात् ॥
ततः सर्वाङ्गनिष्ठस्य प्रत्यग्ब्रह्मैक्यगोचरा ।
या वृत्तिर्मानसी शुद्धा जायते वेदवाक्यतः ॥
तस्यां या चिदभिव्यक्तिः स्वतःसिद्धा च शाङ्करी ।
तदेव ब्रह्मविज्ञानं तदेवाज्ञाननाशनम् § ॥
प्रत्यग्ब्रह्मैक्यरूपा या वृत्तिः पूर्णा ‖ ऽभिजायते ।
शब्दलक्षणसामग्र्या मानसी सुदृढा भृशम् ॥
तस्याश्च द्रष्टृभूतश्च ¶ प्रत्यगात्मा स्वयंप्रभः ।
स्वस्य स्वभावभूतेन ब्रह्मभूतेन ** केवलम् ॥
स्वयं तस्यामभिव्यक्तस्तद्रूपेण मुनीश्वराः ।
ब्रह्मविद्यासमाख्यस्तदज्ञानं †† चित्प्रकाशितम् ॥
प्रतीत्या केवलं सिद्धं दिवाभीतान्धकारवत् ।
अभूतं वस्तुगत्यैव स्वात्मना ग्रसते स्वयम् ॥

---

* फलोपकारमङ्गं स्यादिति पाठः कैवल्यरत्ने ।

† एते श्लोका मानवोपपुराणे ४ अध्या॰ कै॰ र॰ का॰ वि॰ सु॰ १ खण्डे १८८३ ।

‡ मननादस्तीति पा॰ कै॰ र॰ ।

§ नाशकमिति पाठः । एते श्लोकाः पराशरोपपुराणे १४ अ॰ कै॰ र॰ का॰ वि॰ सु॰ ४ खण्डे १८८३ ।

‖ ज्ञप्तिः पूर्णेति पाठः पा॰ कै॰ र॰ ¶ तस्यां च द्रव्यभूतस्त्विति पा॰ कै॰ र॰ ।

** तस्य स्वरूपभूतेन ब्रह्मरूपेणेति पा॰ कै॰ र॰ ।

†† विद्यासमाख्यं सदज्ञानमिति २ पु॰ पा॰ । विद्यासमाख्यः सदिति पा॰ कै॰ र॰ ।

स्वात्मना ऽज्ञानतत्कार्यं प्रसन्नात्मा स्वयं बुधाः ।
स्वपूर्णब्रह्मरूपेण स्वयमेवावशिष्यते ॥
एवंरूपावशेषस्तु स्वानुभूत्येकगोचरः ।
येन सिध्यति विप्रेन्द्रास्तद्धि विज्ञानमैश्वरम् * ॥

नन्वेवमपि श्रवणस्य विधिर्नोपपद्यते । तथा हि । स किं ज्योतिष्टोमादेरिवापूर्वविधिः उतावघातादिवन्नियमविधिः किं वा पञ्च पञ्चनखा भक्ष्या इत्यादिवत् परिसंख्याविधिः † । नाद्यः । वेदान्तश्रवणादीनां दृष्टफलब्रह्मज्ञानं प्रति साधनत्वस्यान्वयव्यतिरेकाभ्यां सिद्धत्वात् । प्रसिद्धं हि लोके वैद्यशास्त्र ‡ श्रवणस्य तद्विषयावगमं प्रति साधनत्वम् । न द्वितीयः । नियमादृष्टस्य कल्पकाभावात् । अवघातादौ तु नियमादृष्टजन्यपरमापूर्वमेवैतत्कल्पकम् । न च ब्रह्मज्ञानमदृष्टजन्यं केवलव्यतिरेकाभावात् । न हि वेदान्तश्रवणादौ सत्यपि नियमादृष्टाभावापराधेन ब्रह्मज्ञानानुत्पत्तिर्दृष्टचरी । ज्ञानस्य कथं चिददृष्टजन्यत्वे ऽप्ययं विधिर्भाव्यविरुद्धः । समन्वयसूत्रव्याख्याने महता प्रयत्नेन विधिनिराकरणात् । अन्यथा वेदान्तानां विधिपरत्वं ब्रह्मपरत्वं चेति वाक्यभेदप्रसङ्गः । नापि तृतीयः । पञ्चनखापञ्चनखभक्षणयोरन्यतः प्राप्तावन्यपरिवर्जनवदात्मसाक्षात्कारस्योपनिषदतिरिक्तात् प्राप्त्यसंभवात् । तस्मान्नास्ति श्रवणविधिरिति । अत्रोच्यते । दृष्टफलस्यापि धर्मज्ञानस्य साधने ऽध्ययने नियमविधिस्तावदङ्गीकृत एव । यदा त्वर्वाचीनपुरुषार्थे परोक्षे धर्मज्ञाने ऽप्येवं तदा किमु वक्तव्यं परमपुरुषार्थब्रह्मसाक्षात्कारसाधने श्रवणे नियमविधि § रिति । यद्यध्ययने नियमादृष्टजन्यं यागीयापूर्वं तत्कल्पकं स्यात् तर्हि श्रवणे ऽपि ब्रह्मज्ञानं तत्कल्पकमस्तु । ब्रह्मज्ञानस्य सर्वादृष्टजन्यत्वात् । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इति स्मरणात् । अत्र हि प्रसिद्धयागादीनेवापेक्ष्य सर्वग्रहणमिति भ्रमं व्युदस्य श्रवणादेरपि संग्रहायैवाखिलमित्युक्तम् । अन्यथा पौनरुक्त्यात् ।

* मानवोपपुराणे ४ अध्या॰ कै॰ र॰ का॰ वि॰ सु॰ १ खण्डे १८८३ ।
† किं वा परिसंख्याविधिरित्यत्र २ पुस्तके पाठः । ‡ वैद्यकशास्त्रेति १ पुस्तके पाठः ।
§ साक्षात्कारसाधनश्रवणविधिरिति २ पु॰ पाठः ।

योऽनधीत्य द्विजो वेदमन्यत्र * कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः † ॥

इत्यकरणे प्रत्यवायमपेक्ष्य विध्यङ्गीकारे प्रकृते ऽपि तथा ऽस्तु ।

नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।
वर्तमानस्तु संन्यासी पतत्येव न संशयः ‡ ॥

इति प्रत्यवायस्मरणात् । ननु ब्रह्मज्ञाने श्रवणादीनामन्वयव्यतिरेकादिना § नास्ति साधनभावप्राप्तिः निर्विशेषस्य ब्रह्मणो वेदान्तैकसमधिगम्यत्वात् तत्कथं नियमसिद्धिः । मैवम् । व्रीहीनवहन्तीत्यत्र शास्त्रैकगम्यापूर्वीयव्रीहिष्वन्यतो दलनाद्यप्राप्तावपि अवघाते यथा नियमस्तथा श्रवणे ऽपि पाक्षिकत्वमन्तरेणैव नियमो ऽस्तु । अथ व्रीहिमात्रसाधारणाकारेण प्राप्तिमपेक्ष्य तत्र नियमः तदत्रापि समानम् । विषयज्ञानमात्रसाधारणाकारस्य सुवचत्वात् । अथावघाते ऽपूर्वविधिरेव सन्फलतो नियम इति व्यवह्रियते श्रवणे ऽपि तथा भविष्यति । न च भाष्यविरोधः । दर्शनविधेरेव तत्र निराकरणात् । दर्शनविधाने हि प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येनेति न्यायेन प्रत्ययार्थस्य नियोगस्यैव प्राधान्याद् दर्शनस्य प्रकृत्यर्थतया गुणभूतत्वेन तद्विशेषणस्य ब्रह्मणो ऽपि सुतरां गुणभावः स्यात् ततो न वेदान्तैर्ब्रह्म सिध्येत् । फलत्वेन प्रधानं ब्रह्मदर्शनमुद्दिश्य श्रवणविधाने तु न को ऽपि दोषः । वाक्यभेदश्च किमेकदेशिना ऽऽपाद्यते किं वा तान्त्रिकेण । नाद्यः । वेदान्ते ऽप्यवान्तरवाक्यभेदेन विविदिषन्ति यज्ञेनेत्यत्र ज्ञानसाधनत्वेन यज्ञादिविध्यङ्गीकारात् । न द्वितीयः । प्रेताग्निहोत्रप्रकरणे अधस्तात्समिधं धारयन्ननुद्रवेदित्यधोधारणं विधायोपरि हि देवेभ्यो धारयतीति पठितम् । तत्र दैविकमुपरिधारणमन्यप्रकरणमध्ये श्रुतमपि विधेयमिति विधिस्तु धारणे ऽपूर्वत्वादित्यधिकरणे निर्णीतत्वात् । अथ कथं चिदेतदधिकरणं प्रभाकरो नाङ्गीकुर्यात्तथापि दर्शपूर्णमासप्रकरणे तिस्रो रात्रीर्व्रतं चरेदिति रजस्वलाया व्रतकलापविधिमङ्गीकरोत्येव । तस्माद् ब्रह्मप्रकरणे ऽपि श्रवणं विधीयतां का

* वेदानन्यत्रेति २ पु॰ पाठः ।  † मनुस्मृतौ २ अध्याये १६८ श्लोकः ।
‡ साम्बोपपुराणे १-अध्याये । कै॰ र॰ का॰ वि॰ सु॰ ६ खण्डे १८८३ ।
§ श्रवणं विना ऽन्वयव्यतिरेकादीनामिति २ पु॰ पाठः ।

तत्र हानिः । अथ व्रतकलापस्य प्रकरणान्वयासंभवादगत्या वाक्यभेदाश्रयणम् । इह तु तव्यप्रत्ययस्यार्हार्थत्वेनाप्यन्वयसंभवान्न तद्युक्तमिति तवापरितोषः तर्हि तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्येत्यादिवाक्यं श्रवणादिविधायकमस्तु । तस्यानारभ्याधीतत्वेनोक्तविरोधाभावात् । आपाततः श्रवणाद्यप्रतीतावपि वाक्यपर्यालोचने वाक्यस्य श्रवणादि * विधिपरत्वात् । सूत्रकारेणैव सहकार्यन्तरविधि † रिति सूत्रे पाण्डित्यबाल्ययोः श्रवणमननरूपत्वेन विधिं सिद्धवत्कृत्य अथ मुनिरिति वाक्यशेषे निदिध्यासनरूपत्वेन मौनस्य विधित्वप्रतिपादना ‡ दसाम्प्रदायिकत्वं दूरापास्तम् । नन्वेवमपि अधीत्य स्वाध्यायेनावगतस्य § श्रोतव्य इत्यस्य श्रवणविधेरनुपपत्तिस्तदवस्थैवेति चेद् न । तव्यप्रत्ययस्य विधावपि स्मरणात् । तद्विजिज्ञासस्वेत्यादिषु समानप्रकरणेषु श्रुत्यन्तरेषु श्रवणस्य ‖ अवश्यं वाक्यभेदेन विधेरङ्गीकर्तव्यतया त्वदपरितोषस्य निरवकाशत्वात् । न चैकस्यामेव शाखायां श्रोतव्यः पाण्डित्यं निर्विद्येति श्रवणविधिद्वयं पुनरुक्तमिति वाच्यम् । एकत्र विधायापरत्र विधिमनूद्य विशेषकथनात् । अथ वा यथा द्विर्मैत्रेयीब्राह्मणमपुनरुक्तम् एकस्योपसंहाररूपत्वात् तथा द्विः श्रवणविधिर्भवतु । तस्मादुपपद्यतएव श्रोतव्य इति विधिः ॥

तत्र श्रवणं नाम वेदान्तवाक्यानि विचार्योपक्रमादिभिर्लिङ्गैर्वाक्यतात्पर्यनिर्णय इति पुराणवचनेनोक्तम् । तथा च विरक्तेनाधिकारिणा ऽमृतत्वसाधनभूतात्मदर्शनाय वेदान्तवाक्यविचारः कर्तव्य इति । एवं तावदधीतस्वाध्यायः पुमान्वेदादेवावगत्य पश्चादेवं संदिग्धे । किं वैराग्यमात्रमधिकारिविशेषणम् उतान्यदप्यस्ति नानाविशेषणेषु तद्विशिष्टाधिकारिणि च किं प्रमाणम् वेदान्तवाक्यविचारश्च धर्मविचारेणैव गतो न वा कथं वा वेदान्तवाक्यानि विचार्याणि किंलक्षणमात्मतत्त्वं तस्मिंश्च किं प्रमाणम् तस्य च प्रमाणस्यास्ति केन चिद्विरोधो न वा तत्त्वगोचरज्ञानं च किं कर्मभिः समुच्चित्यामृतत्वसाधनम् उत केवलमेव केवलस्य साधनत्वे वा किं प्रमाणम् कीदृशममृतत्वं किंप्रमाणकं चेति । तएते संदेहा अन्येप्येवं-

---

* श्रवणाद्यप्रतीतावपि पर्यालोचने वाक्यश्रवणादि-इति १ पु॰ पाठः ।

† व्याससू॰ ३ अ॰ ४ पा॰ ४७ सू॰ ।

‡ विधिप्रतिपादनादिति २ पु॰ पाठः ।

§ अधीतस्वाध्यायमध्ये ऽवगतस्येति २ पुस्तके पाठः । ‖ श्रवणस्येति २ पुस्तके नास्ति ।

विधा नानाविधैर्न्यायैर्निर्णेतव्याः । तांश्च न्यायान्परमकृपालुर्भगवान्बादरायणः सूचयितुकामः प्रथमतः श्रोतव्य इति वाक्ये प्रतिपन्नमधिकारिविषयफलाख्यानुबन्धत्रयोपेतं विधिं न्यायेन निर्णयंस्तदर्थभूतविचारकर्तव्यतां वक्ष्यमाणकृत्स्नशास्त्रप्रवृत्तिहेतुत्वेनोपोद्घातभूतां सूचयामास—अथातो ब्रह्मजिज्ञासेति ॥ तत्रात्मनस्तु कामायेति वाक्ये विरक्त्युपलक्षितसाधनचतुष्टयसंपन्नो य एवाधिकारी प्रतीयते स एवाथशब्दार्थः । अमृतत्वस्य तु नाशास्ति वित्तेनेति वाक्ये वित्तोपलक्षितलौकिकवैदिककर्मभिरमृतत्वं नास्तीति यदुक्तं तदेवातःशब्देन हेतूक्रियते । आत्मनि खल्वित्यादिना वाक्येनामृतत्वसाधनात्मदर्शनाय वेदान्तवाक्यविचाररूपं श्रवणं कर्तव्यमित्युक्तं तत्सर्वं ब्रह्मजिज्ञासापदेनावगन्तव्यम् * । नन्वेतत्सूत्रं विधायकमनुवादकं वा । नाद्यः । लिङ्लोट्तव्यप्रत्ययानामदर्शनात् । नेतरः । अप्रवर्तकेनानेन श्रवणविध्यसंग्रहप्रसङ्गात् । मैवम् । कर्तव्येत्यध्याहार्यत्वात् । ज्ञानेच्छयोर्वस्तुतन्त्रयोः कर्तुमशक्यत्वात् अध्याहृतेन जिज्ञासापदं नान्वियादिति चेत् तर्ह्यनयैवानुपपत्त्या जिज्ञासापदेनानुष्ठानयोग्यो विचारो लक्ष्यताम् । अविनाभावसम्बन्धश्च संदंशन्यायप्रसारात् सुसंपादः । संदष्टो हि ज्ञानेच्छाभ्यां विचारः । प्रथमत इच्छायां सत्यां विचारे सति पश्चादेव ज्ञानोत्पत्तेः । न च वाच्यं लक्षणायां विचाराख्यो विषयानुबन्ध एव सिध्येद् न ब्रह्मज्ञानाख्यः फलानुबन्ध इति । अजहल्लक्षणया स्वार्थस्यापि स्वीकृतत्वात् । ब्रह्मज्ञानजनकत्वान्यथानुपपत्त्या विचारस्य वेदान्तवाक्यविषयत्वं लभ्यते । न ह्यन्यविचारकाणां ब्रह्मज्ञानमुपलभामहे । फलत्वान्यथानुपपत्त्या ब्रह्मज्ञानस्य मोक्षसाधनत्वसिद्धिः । अधिकारिभिरिष्यमाणं हि फलम् । अत्र हि साधनचतुष्टयसंपन्ना अधिकारिणो निःशेषदुःखोच्छित्तिनिरतिशयानन्दावाप्ती तत्साधनं च विहाय नान्यदिच्छन्ति । तत्त्वज्ञानस्य दुःखोच्छेदानन्दावाप्तिरूपत्वासंभवेन परिशेषात्तत्साधनत्वम् । तदेवं साधनचतुष्टयसंपन्नस्य कर्मभिर्मोक्षासिद्धेर्मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति श्रुत्यर्थः समग्रोऽपि सूत्रे संगृहीतः † । एवं शास्त्रप्रवृत्तिहेतुत्वं च विचारकर्तव्य-

* जिज्ञासापदेऽवगन्तव्यमिति २ पु० पाठः ।
† सूत्रेण संगृहीत इति २ पु० पाठः ।

ताया अन्वयव्यतिरेकसिद्धम् । सति ह्यनुबन्धचयोपेते विधौ पुरुषाः प्रवर्तन्ते ज्योतिष्टोमादौ तथा दर्शनात् । असति तु न प्रवर्तन्ते सप्तद्वीपा वसुमतीत्यादौ प्रवृत्त्यदर्शनात् । सा च विचारकर्तव्यता वक्ष्यमाणशास्त्रप्रवृत्तिहेतुभूता प्रथमसूत्रेणानेनेत्थं निर्णीयते । विमतं शास्त्रमारम्भणीयं सम्भावितविषयप्रयोजनत्वात् कृष्यादिवदिति । न च सूत्रे विषयप्रयोजनानुपादानान्नायं विषयः सूत्रसिद्ध * इति शङ्कनीयं मुखतो ऽनुपादाने ऽप्यर्थात्सूचितत्वात् । सूत्रस्य हि सूचनमलङ्कारो न तु दोषाय । तत्र तावज्जन्माद्यस्य यत † इत्यादिशास्त्रेण विचार्याणां वेदान्तानां स वा अयमात्मा ब्रह्मेत्यादिश्रुतिप्रसिद्धं ब्रह्मात्मैकत्वं विषयः । तच्चैकत्वमखण्डैकरसवस्तुप्रतिपादकेन ब्रह्मशब्देन सूत्रे सूचितम् ‡। तरति शोकमात्मवित् ब्रह्मविदाप्नोति परमित्यादिश्रुतिप्रसिद्धं दुःखोच्छेदब्रह्मप्राप्ती प्रयोजनम् । ते च तत्साधनभूतब्रह्मज्ञा निर्देशात्सूचिते एव । न केवलं सूत्रकारो विषयप्रयोजने सूचितवान् किं तु तयोरुपपादनं चैवमभिप्रेयाय । विमतं शास्त्रं सम्भावितविषयप्रयोजनम् अविद्यात्मकबन्धप्रत्यनीकत्वात् जाग्रद्बोधवदिति । न च बन्धस्याविद्यात्मकत्वमसूत्रसूचितमिति वाच्यम् । बन्धस्य ज्ञाननिवर्त्यत्वाङ्गीकारेणैव तत्सूचनात् । तथा हि । निःशेषदुःखनिवर्तकत्वं तावद् ब्रह्मज्ञानस्य फलत्वसिद्धये सूत्रकारेणाङ्गीकृतम् । प्रमातृत्वकर्तृत्वभोक्तृत्वादिबन्धश्च सर्वो ऽपि दुःखबीजत्वाद् दुःखमेव । तत्र विचारणीयं किमयं बन्धः पारमार्थिकः स्यादपारमार्थिको वेति । आद्ये ब्रह्मज्ञानान्न निवर्तेत । ये त्वेकदेश्यादयः पारमार्थिकस्यैव ज्ञानान्निवृत्तिमङ्गीकुर्युस्ते प्रष्टव्याः ज्ञानं स्वविषये वा निवृत्त्याख्यमतिशयं जनयति स्वाश्रये वा । आद्ये ऽपि स्वविषयं संसारिणमात्मानमेव निवर्तयेद् उत तद्गतं धर्ममात्रम् अथ वा स्वबोध्याखण्डैकरसत्वविरोधिन एव कर्तृत्वादीन् किं वा विषयगतानवबोधमेव । न तावत्प्रथमद्वितीयतृतीयाः । न हि नानावर्णे चूतादिफले नीलभागज्ञानं स्वविषयं वा तत्समवेतरसादिकं वा विरोधिनं पीतिमादिगुणं वा निवर्तयति । चतुर्थे त्वस्मन्मतापत्तिः । आश्रयाति-

* नोभे विषयप्रयोजने सूत्रसिद्धे इति २ पु॰ पाठः।
† व्याससू॰ १ अ॰ १ पा॰ २ सू॰ ।
‡ सूत्रेण सूचितमिति २ पु॰ पाठः।

शयपक्षे ऽपि किमाश्रयनिवृत्तिः किं वा तद्गुणानाम् उताश्रयविषयोभयसंबन्धिधर्माणाम् । नाद्यः । प्रतिक्षणमात्मविनाशापत्तेः । न द्वितीयः । घटज्ञानेनात्मगतधर्मादिगुणानिवृत्तेः । न तृतीयः । स्वदेहाज्ञानेन देहात्मसंबन्धाद्यनिवृत्तेः । तमेव विदित्वा ऽतिमृत्युमेतीति श्रुतत्वाद्वास्तवो ऽपि बन्धो ज्ञाननिवर्त्य इति चेद् न । श्रुतेर्बन्धसत्यत्वासत्यत्वयोस्ताटस्थ्यात् । अस्माभिस्तु श्रुतोपपत्त्यर्थं बन्धस्या * विद्यात्मत्वं कल्प्यते । यथा ज्योतिष्टोमादीनां श्रुतस्य स्वर्गसाधनत्वस्योपपत्त्यर्थमपूर्वं भवद्भिः कल्प्यते तद्वत् । अथ तत्र क्षणिकानां कर्मणां कालान्तरभाविफलसाधनत्वाभावव्याप्तिनियमः कल्पको ऽस्ति तर्हीहापि ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिनियमः कल्पको ऽस्तु । अतो ऽपारमार्थिकत्वमवशिष्यते बन्धस्य † । तदेवं ब्रह्मज्ञाननिवर्त्यस्य बन्धस्याज्ञानात्मकत्वं सूत्रेणैव सूचितम् ॥

नन्वेवं तदविद्यात्मकत्वं ‡ सूत्रकारेण मुखत एव वर्णनीयं विषयप्रयोजनसाधनद्वारा कृत्स्नशास्त्रारम्भसमर्पकत्वात् । मुखतो ऽप्रतिपादने तात्पर्यप्रसङ्ग इति चेत् तर्हि वर्णितमेवैतन्मुखतो द्वितीयाध्याये तद्गुणसारत्वा§दित्यादिसूत्रे । सूत्रस्य चायमर्थः । आत्मनो देहोत्क्रान्तिपरलोकगत्येतल्लोकागतीनां श्रुतत्वात्सर्वगतत्वं विरुद्धमिति चेद् बुद्धिगुणसारत्वात् । बुद्ध्यात्मनोरितरेतरतादात्म्याध्यासेन बुद्धिगुणेष्वेवोत्क्रान्त्यादिषु सर्वगतस्यात्मनो ऽभिमानमात्रं जायते । तच्च श्रुत्या ऽनूद्यते निजस्वरूपबोधनायेति । तर्हि कृत्स्नशास्त्रारम्भं प्रत्युपोद्घातत्वात्प्रथममेवाध्यासविषयं सूत्रं प्रणेतव्यम् । उपोद्घातश्च प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनमिति चेद् न । प्रतिपादने प्रवृत्तेन सूत्रकारेण विरोधपरिहारसूत्रस्य प्रथमतो वक्तुमशक्यत्वात् । प्रतिपाद्यं मुखतः प्रतिज्ञाय पश्चात्तत्सिद्धिहेतुप्रदर्शनं प्रतिपादनम् । तथा च प्रथमेनाध्यायेन ब्रह्मणि वेदान्तसमन्वयं प्रदर्श्य तदुपपादको विरोधपरिहारः पश्चात्कर्तव्यः । प्रथम ‖ मप्रदर्शिते पुनः समन्वयविशेषे तद्विरोधाशङ्का तन्निराकरणं च निर्विषयं स्यात् । नन्वेवमादावध्या-

* बन्धस्येति २ पु॰ नास्ति ।

† अपारमार्थिकत्वं परिशिष्यते इति २ पु॰ पाठः । बन्धस्येत्येतदन्ते न दृश्यते ।

‡ नन्वेतदविद्यात्मकत्वमिति २ पु॰ पाठः । § व्याससू॰ २ अ॰ २ पा॰ २६ सू॰ ।

‖ प्रथममिति २ पु॰ नास्ति ।

सानुक्तौ विषयप्रयोजनासिद्ध्या शास्त्रप्रवृत्तिर्न स्याद् मैवम् । प्रथमसूत्रे ऽध्यासः साक्षादनुक्तो ऽप्यर्थात्सूचित इत्युपपादितत्वात्सिध्यत्येव शास्त्रप्रवृत्तिः ॥

ननु सूत्रसूचितो ऽप्यध्यासो न युक्तिसहः । तथा हि । आत्मानात्मानावितरेतरतादात्म्याध्यासरहितौ क्वापीतरेतरभावरहितत्वात् तमःप्रकाशवत् । न च हेत्वसिद्धिः । विमतौ तादात्म्यशून्यौ विरुद्धस्वभावत्वात्तमःप्रकाशवत् । न चासिद्धो हेतुः । विमतौ विरुद्धस्वभावौ युष्मदस्मत्प्रत्ययगोचरत्वाद् देवदत्ततद्वैरिवत् । न च वाच्यं देवदत्तस्य स्वशरीरादिसंघाते ऽस्मत्प्रत्ययस्तत्रैव तद्वैरिणो युष्मत्प्रत्ययः । न च तत्र विरोधो ऽस्ति । एवं तद्वैरिण्यपि प्रत्ययव्यत्यासेन योजने दृष्टान्तः साध्यविकलः स्यादिति । न हि भिन्नाश्रययोः प्रत्यययोर्विषयौ दृष्टान्तत्वेन विवक्ष्येते किं तर्हि समानाश्रययोरिति । न हि प्रत्येकाकारौ दृष्टान्तत्वेन विवक्ष्येते किं तर्हि देवदत्तप्रतीत्या तद्वैरिप्रतीत्या च सिद्धः समुदायाकारो दृष्टान्त इति नोक्तदोषः । स्यादेतत् । किमत्र लोकप्रसिद्धावात्मानात्मानौ पक्षीक्रियेते किं वा प्राभाकरादिसिद्धौ उत वेदान्तिसिद्धौ । नाद्यः । द्वयोरनुमानयोः सिद्धसाधनत्वात् । तृतीयानुमानस्यानुभवविरोधात् । लोके हि देहादिचैतन्यान्तसंघात आत्मा पाषाणादिरनात्मा । न च तयोरैक्याध्यासैक्ये वेदान्त्यभिमते । नापि तयोर्नियतो विरोधो ऽनुभूयते । न द्वितीयः । प्राभाकरादयो हि प्रमातृत्वकर्तृत्वभोक्तृत्वाद्याश्रयं जडमात्मानमाहुः इन्द्रियदेहाद्यखिलप्रपञ्चमनात्मानम् । तत्र वेदान्तिमते प्रमातृत्वाद्याश्रयो ऽहङ्कारो जाड्यं च तत्कारणमज्ञानमित्युभयमप्यनात्मन्येवान्तर्भवति । तथा चानात्मन एककोटेरध्यासतादात्म्यविरोधानङ्गीकारात्पूर्वोक्तमेव दोषद्वयं स्यात् । न तृतीयः । वेदान्तिनो हि सर्वोपप्लवरहितं विज्ञानघनमात्मानमाहुस्तद्व्यतिरिक्तं च सर्वमनात्मानम् । तत्र किमेकस्मिन् प्रत्ययद्वयगोचरत्वं हेतुत्वेन विवक्षितम् उतात्मन्यस्मत्प्रत्ययगोचरत्वम् अनात्मनि चेतरदिति । आद्ये स्वरूपासिद्धिर्द्वितीये भागासिद्धिः । देहेन्द्रियान्तःकरणप्राणादिष्वनात्मसु युष्मत्प्रत्ययाभावात् । व्यवहारदृष्ट्या तदभावे ऽपि शास्त्रदृष्ट्या चिदवभास्यो युष्मदर्थ इत्येतल्लक्षणानुसारेणास्त्येव तत्र युष्मत्प्रत्यय इति चेद् एवमपि स्वप्रकाशे चिदात्मनि वेदान्तिनामस्मत्प्रत्ययाभावात्स

दोषस्तदवस्थः । तस्मान्नानुमानसिद्धिरिति । अत्रोच्यते । वेदान्तिनं प्रत्यस्त्येवानुमानसिद्धिः । न चात्मनि भागासिद्धिः । स्वप्रकाशस्याप्यहङ्कारे स्फुटतरव्यवहारयोग्यत्वेनास्मत्प्रत्ययगोचरत्वस्योपचरितुं शक्यत्वात् । न चैवं मन्तव्यं देहद्वयसाक्षिणोश्चैतन्ययोरन्योन्यं युष्मदस्मदर्थत्वे ऽपि विरोधाभावादनैकान्तिक इति । चैतन्यस्य चिदवभास्यत्वलक्षणलक्षितयुष्मदर्थत्वाभावात् । तादृश एव चात्राभिप्रेतो न तु लौकिकयुष्मदर्थः । तथा ऽप्येतेनानुमानेन प्रत्ययद्वारा विरोधसिद्धिर्न तु स्वरूपेणेति चेत् तर्ह्येवमस्तु । आत्मानात्मानौ विरुद्धस्वभावौ विषयिविषयत्वान्नेत्ररूपवदिति । ननु चिद्रूपस्यात्मनो जड़रूपमनात्मानं प्रति साधकत्वेनानुकूल्यमनुभूयते ऽतो वध्यघातकभावलक्षणस्य सहावस्थानसामर्थ्याभावलक्षणस्य वा विरोधस्य च प्रातिकूल्यस्य प्रसाधने ऽनुभवविरोधः तथा दृष्टान्तश्च साध्यविकल इति चेद् मैवम् । भावाभाववत्परस्परात्मतासामर्थ्याभावलक्षणस्य विरोधस्येह विवक्षितत्वात् । कथं तर्हि मध्यानुमाने तमःप्रकाशयोर्दृष्टान्तत्वं तयोः सहावस्थानसामर्थ्याभावलक्षणविरोधस्य प्रसिद्धत्वादिति चेद् मैवम् । मन्दप्रदीपे वेश्मनि तमसो दीपेन सहावस्थानात् । अन्यथा स्फीतालोकप्रदेशवदत्रापि स्पष्टरूपदर्शनप्रसङ्गात् । तमःप्रकाशशब्दाभ्यां तदेकदेशभूतौ छायातपावुपलक्ष्येते इति चेत् तथापि छायायामेकविधायां तारतम्येनोपलभ्यमानमौष्ण्यं स्वधर्मिण आतपस्यापि अवश्यमवस्थानं सूचयतीति सहावस्थानं दुर्वारम् । एवमेव तमःप्रकाशशब्दाभ्यां लक्षितलक्षणया छायातपस्थयोः शैत्यौष्ण्ययोः स्वीकारे ऽपि सहावस्थानं सुसंपादम् । तस्माज्जातिव्यक्त्योर्यथा तादात्म्यसामर्थ्यं नैवं तमःप्रकाशयोरित्ययमेव तयोर्विरोधः ॥

ननु तमःप्रकाशदृष्टान्ते भावाभावरूपत्वमुपाधिः । आलोकाभावस्तम इति तार्किका रूपदर्शनाभावस्तम इति प्राभाकरा इति चेद् मैवम् । उपचयापचयाद्यवस्थाभेदवत्त्वेनोपलक्ष्यमाणस्याभावत्वायोगात् । नीलरूपत्वेन द्रव्यत्वात् । ननु भावत्वपक्षे बहलालोकवति देशे निमीलितनयनस्य कथं तमःप्रतीतिः । बहलालोकेन निवृत्त्यङ्गीकारात् । सहावस्थानं तु मन्दालोकेनैव पूर्वमुक्तमिति चेद् न । गोलकान्तर्वर्तितमसः प्रतीत्युपपत्तेः । न च नेत्रस्यान्तर्वर्तिवस्तुग्राहकत्वासम्भवः । पिहितकर्णस्यान्तरशब्दग्राहकत्वदर्श-

नात् । न चैवं गोलकान्तरस्याञ्जनादेरपि निमीलितनयनेन ग्रहणप्रसङ्गः । तमोव्यतिरिक्तरूपिण आलोकसहकृतचक्षुर्ग्राह्यत्वनियमात् । अथ मतं द्रव्यत्वे सति तमस आलोकविनाशितस्यालोकापगमे झटिति नोत्पत्तिः । कार्यद्रव्याणां द्व्यणुकादिक्रमेणैवारम्भादिति । तन्न । विवर्तवादिनां क्रमानपेक्षणात् । कारणं तु मूलाविद्यैव । अथापि तमो न रूपवद्द्रव्यं स्पर्शशून्यत्वादाकाशवदिति चेद् न । वायुर्न स्पर्शवान् रूपशून्यत्वादाकाशवदित्याभासेन समानत्वात्* प्रत्यक्षविरोधस्य तुल्यत्वात् । अथालोकाभावे समारोपितं नीलरूपं गोचरयतीति तमःप्रत्यक्षस्यान्यथा गतिरुच्यते एवमपि हेतुरनैकान्तिकः । रूपवद्द्रव्यस्यैव धूमस्य चक्षुःप्रदेशादन्यत्र स्पर्शशून्यत्वात् । तत्र विद्यमान एव धूमस्पर्शोऽनुद्भूत इति चेत् तर्हि तमःस्पर्शोऽपि सन्नेव सर्वत्रानुद्भूत इति हेत्वसिद्धिः स्यात् । न च सतः सर्वत्रानुद्भवोऽसम्भावितः । आकरजे सुवर्णादौ सत एव स्वपरप्रकाशकभास्वररूपस्योष्णस्पर्शस्य च सर्वत्रानुद्भवदर्शनात् । तदेवं भावरूपतमोवादे न कोऽपि दोषः । नन्वभाववादेऽपि तथा । उपचयाद्यवस्थानां प्रतियोग्यालोकोपाधिकत्वाद् नीलरूपस्यारोपितत्वादिति चेद् मैवम् । दुर्निरूपत्वात् । तथा हि । किमालोकमात्राभावस्तमः उतैकैकालोकाभावः सर्वालोकाभावो वा । प्रथमद्वितीयपक्षयोः प्रागभाव इतरेतराभावः प्रध्वंसाभावो वा तम इति दुर्भणम् । सवितृकरसंतते देशे प्रदीपजन्मनः प्राग्वा जाते वा प्रदीपे दीपनाशे वा तमोबुद्ध्यभावात् । तृतीये सर्वालोकसंनिधानमन्तरेण न निवर्तेत । रूपदर्शनाभावस्तम इत्यप्ययुक्तम् । बहलान्धकारसंवृतापवरकमध्यस्थितस्य बहीरूपदर्शनान्तस्तमोदर्शनयोर्युगपदेव भावात् । तस्मान्नाभावस्तम इति दृष्टान्ते नास्त्युक्तोपाधिः ॥

नन्वेवमप्यन्योन्यतादात्म्यसामर्थ्याभावाख्यो भवदीयो मूलहेतुरनैकान्तिकः । इदं रजतमित्यत्र भ्रान्तिस्थले पुरोवर्तिरजतयोर्विविक्तयोस्तादात्म्यसामर्थ्याभावेऽपि तादात्म्यसंदर्शनादिति चेद् न । तत्र सामर्थ्यसद्भावेन हेत्ववृत्तेः । तत्सामर्थ्यं च सम्यग्रजतस्थले पुरोवर्तिरजतयोर्वास्तवतादात्म्यदर्शनादवगन्तव्यम् । न चैवमात्मानात्मनोरपि क्व चिद्वास्तवतादात्म्ये सति तत्सामर्थ्यसम्भवादसिद्धो हेतुरिति वाच्यम् । वास्त-

* समानयोगक्षेमत्वादिति २ पु॰ पाठः ।

वतादात्म्यस्य तयोः क्वापि दुःसंपादत्वात् । तथा हि । किं द्रष्टुर्दृश्यतादात्म्यमुच्यते दृश्यस्य वा द्रष्टृतादात्म्यम् । आद्ये ऽपि न तावत्स्वाभाविकं चिदेकरसे द्रष्टरि दृश्यांशासम्भवादन्यथा कर्मकर्तृभावेन तादात्म्यानुपपत्तेः । आगन्तुकत्वे ऽपि किं द्रष्टा स्वयमेव दृश्यांशाकारेण परिणमते उत हेतुबलात् । उभयमप्यसङ्गतं द्रष्टुर्निरवयवत्वात् । न हि निरवयवमाकाशं स्वतो वा कारणान्तराद्वा सावयवाकारेण परिणममानं दृष्टम् । दृश्यस्य धर्मिणो द्रष्टा प्रतियोगिना तादात्म्यमित्यस्मिन् द्वितीये ऽपि पक्षे द्रष्टृत्वस्य स्वाभाविकत्वे दृश्यत्वं हीयेत । अंशतो दृश्यत्वमपि स्वस्यास्तीति चेत् तर्हि कर्मकर्तृत्वविरोधः । आगन्तुकत्वे ऽपि किं दृश्यं स्वयमेव चिद्रूपेण परिणमते उतात्मचैतन्यं स्वस्मिन्संक्रामयति । नाद्यः । जडजन्यस्य कार्यस्य चिद्रूपत्वासम्भवात् । न हि जडाया मृदः परिणामो घटः चिद्रूपो दृष्टः । न द्वितीयः । आत्मचैतन्यस्य सर्वगतस्य वस्तुतः प्रवेशायोगात् । तदेवं क्वाप्यत्यन्तदुःसंपादवास्तवतादात्म्ययोश्चिदचितो * स्तत्सामर्थ्यासम्भवेन हेतुसिद्धेर्मिथ्यानुमानं सुस्थम् । ततो मूलानुमानसिद्धेरध्यासाभावः सुस्थितः । मा भूद्धर्मिणोस्तादात्म्याध्यासः । तथाप्यात्मधर्माणामात्मनि संसर्गाध्यासो ऽस्तु । न च चिदेकरसस्यात्मनो धर्मासम्भवः । आनन्दविषयानुभवनित्यत्वादीनां सत्त्वात् । यद्यपि एते स्वरूपभूता एवात्मनः तथाप्यन्तःकरणवृत्त्युपाधौ नानेवावभासन्तइति तेषां धर्मत्वमुपचर्यते । न च धर्मिणं विहाय धर्माणां स्वातन्त्र्येणाध्यासासम्भवः । जपाकुसुमसंनिधौ लोहितः स्फटिक इत्यादौ धर्ममात्राध्यासदर्शनात् । नैतत्सारम् । धर्माणां स्वातन्त्र्यायोगात् । स्फटिके ऽपि प्रतिबिम्बितजपाकुसुमाश्रितमेव लौहित्यं प्रतीयते न तु स्वातन्त्र्येण । तस्मान्नास्ति धर्माणामप्याश्रयव्यत्यासेन संसर्गाध्यासः । धर्मधर्मिणोरर्थयोरध्यासे निराकृते तदविनाभूतो ज्ञानाध्यासो ऽपि निराकृत एव । तस्मान्न युक्तिसहो ऽध्यास इति ॥

अत्रोच्यते । किं युक्तिविरोधादवस्तुत्वमध्यासस्यापाद्यते किं वा वस्तुस्वरूप † मेवापलप्यते । नाद्यः । अनिर्वचनीयवादिनामस्माकमध्यासस्यावस्तु-

* अत्यन्तदुःसंपादो वास्तवतादात्म्ययोगश्चिदचितोरिति १ पु॰ पाठः ।

† वस्त्विति २ पुस्तके न दृश्यते ।

त्वयुक्तिविरोधयोरिष्टत्वात् । विरुध्यते ह्यात्मानात्माध्यासो युक्तिभिरित्येवानिर्वाच्यत्वमङ्गीक्रियते । अन्यथा तस्य * वस्तुत्वमेवाभ्युपेयं स्यात् । ननु तर्हि अपलपाम एवाध्यासम् । नास्त्येवात्मानात्मनोरध्यासः । तत्सामग्र्यभावात् । लोके हीदं रजतमयं सर्प इत्यादावधिष्ठानाध्यस्यमानयोर्गुणावयवकृतं सादृश्यमध्याससामग्री न चासावत्रास्ति । आत्मनो निर्गुणत्वान्निरवयवत्वाच्च । न च वाच्यं लोहितः स्फटिक इत्यत्रासत्येवोक्तसादृश्ये ऽस्त्यध्यास इति । तत्र सोपाधिकभ्रमत्वेन सादृश्यानपेक्षणात् । लौहित्याश्रयभूतं संनिहितं जपाकुसुममुपाधिस्तस्य स्फटिके लौहित्यावभासनिमित्तत्वात् । नन्वेवं कर्तृत्वाद्याश्रयं संनिहितमहङ्कारमुपाधिं कृत्वा ऽऽत्मनि कर्तृत्वादिकमध्यसितुं शक्यमिति चेत् तर्ह्यस्तु कथं चित्कर्तृत्वाद्यध्याससम्भवस्तथाप्यात्मन्यहङ्कारादिशरीरान्तधर्म्यध्यासो निरुपाधिको न सम्भवत्येव सादृश्याभावादिति चेत् † तदेतदसारम् । गुणैरवयवैश्च शून्यस्यापि गन्धस्य केतकीगन्धसदृशः सर्पगन्ध इत्यादौ यथा सौगन्ध्यधर्मेण सादृश्यं तथा ऽऽत्मनो ऽपि पदार्थत्वधर्मेण सादृश्यसम्भवात् । चैतन्यैकरसे धर्मः को ऽपि वस्तुतो न सम्भवतीति चेत् तर्हि मा भून्निरुपाधिकभ्रमं प्रति सादृश्यस्य सामग्रीत्वम् । सादृश्यमन्तरेणैव पीतः शङ्ख इति निरुपाधिकभ्रमदर्शनात् । अथ तत्र रागपित्तोद्रेककाचकामलादि सामग्र्यन्तरमस्ति अस्त्येव तर्ह्यत्राप्यविद्याख्या सामग्री । ननु ज्ञानाभावत्वेन भावरूपत्वेन च विप्रतिपन्नाया अविद्यायाः सामग्रीत्वाङ्गीकाराद्वरमध्यासापलाप एवेति चेद् मैवम् । प्रत्यगात्मसत्त्वमात्रमुपजीव्य तदीयचिदानन्दाच्छादकत्वेन व्यवस्थितस्यानादेः प्रत्यक्षस्यापलापायोगात् । अन्यथा प्रत्यगात्माप्यपलप्येत ॥

कार्यस्याध्यासस्यानादित्वमयुक्तमिति चेद् मैवम् । आत्मनि तावत्कर्तृत्वभोक्तृत्वरागादिदोषसंयोग एवाध्यासः । तत्र भोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते अकर्तुर्भोगाभावात् । कर्तृत्वं च रागादिदोषसंयोगाध्यासमपेक्षते रागादिरहितस्य कर्तृत्वाभावात् । दोषसंयोगश्च भोक्तृत्वमपेक्षते अनुपभुक्ते ऽनुपभुक्तजातीये वा रागाद्यनुत्पत्तेः । तथा च बीजाङ्कुरवत्प्रवाहरूपेण कर्तृत्वादीनामनादित्वम् । एतेनैतदप्यपास्तं प्रपञ्चस्य प्रतीतौ सत्यामारोप आरोपे

* अन्यथा ऽध्यासस्येति २ पुस्तके । † चेदिति २ पु· नोपलभ्यते ।

च प्रतीतिरिति परस्पराश्रयत्वमिति । अनादित्वे सति पूर्वपूर्वाध्यासोपदर्शितस्य देहादेः संस्काररूपेण स्थितस्योत्तरोत्तराध्यासहेतुत्वात् ॥

न च देहादेरवस्तुत्वादनारोप इति वाच्यम् । प्रतीतिमात्रेणारोप्यत्वसिद्धौ वस्तुसत्ताया अप्रयोजकत्वात् । इदं रजतमित्यादौ हि सत्यानृतयोः शुक्तिरजतयोस्तादात्म्यमध्यस्यते । न च दूरस्थवनस्पत्योः सत्ययोरेव तादात्म्यमध्यस्यतइति वाच्यम् । तत्रापि सत्येव वृक्षद्वये ऽधिष्ठाने ऽनृतस्यैवैकत्वधर्मस्याध्यासात् । अन्यथा वस्तुनोर्गुणगुणिनोरपि तादात्म्यस्याध्यस्तत्वप्रसङ्गात् ॥

यद्यप्यात्मानात्मनोरन्योन्यस्मिन्नन्योन्यतादात्म्याध्यासः समानस्तथाप्यात्मनः संसृष्टरूपेणैवाध्यासो न स्वरूपेणेति सत्यत्वम् । अनात्मनस्तु स्वरूपेणाप्यध्यास इत्यनृतत्वम् । न च तयोः सत्यानृतयोस्तादात्म्ये गुणगुण्यादाविव भेदाभेदावभासेन शौक्ल्यवान् पट इतिवद्देहेन्द्रियादिमानहमिति वा ममेदं देहादीति वा प्रत्ययः शङ्कनीयः । इतरेतरत्वमत्यन्तैकत्वमापाद्यैवाध्यासस्वीकारात् । तर्हि तादात्म्याध्यास इति न वक्तव्यं किं त्वेकत्वाध्यास इत्येव वाच्यमिति चेद् न । पटस्य शौक्ल्यमितिवन्मम देह इति भेदव्यवहारस्य दर्शनात् । न चैवं सति भेदग्रहेण भेदाऽग्रहे व्यापके निवृत्ते तद्व्याप्यो ऽध्यासो ऽपि निवर्त्तेतेति वाच्यम् । भेदग्रहस्यानङ्गीकारात् । न हि लौकिका मद्देह इति भेदं व्यवहरन्तो ऽपि शास्त्रसंस्कारमन्तरेण देहाद्भिन्नमात्मानं गृह्णन्ति । तस्मादनुभवत एकत्वाध्यास एव । व्यवहारतस्तु तादात्म्याध्यास इत्यपि व्यपदेष्टुं शक्यते । देहात्मनोरहमित्यभेदव्यवहारस्य मद्देह इति भेदव्यवहारस्य च सद्भावात् । न चैकत्वमेव तादात्म्यमिति वाच्यम् । भेदाऽभेदसहमन्योन्याभावविरोधि तादात्म्यं भेदविरोध्येकत्वमिति तयोर्विविक्तत्वात् । जीवब्रह्मणोरप्येकत्वमेव वस्तुतो ऽविद्याकल्पितभेद * मपेक्ष्य तादात्म्यमिति व्यपदिश्यतइत्यविरोधः । न च जीवब्रह्मैक्यवदात्मदेहैक्यमनुभूयमानमपि वास्तवं भवितुमर्हति । सत्यानृतरूपेणात्यन्तविविक्तयोर्वास्तवैक्यस्यायोगात् । तस्मादध्यस्तमेवैकत्वम् ॥

तस्य चाध्यासस्यानाद्यनिर्वचनीयभावरूपाज्ञानमुपादानम् । तस्मिन्सत्यध्यासोदयादसति चानुदयात् । नन्वेतावन्वयव्यतिरेकावध्यासप्रतिबन्धक-

* अविद्याभेदकल्पितभेदमिति १ पु० पाठः ।

तत्त्वज्ञानाभावविषयतया ऽप्युपपन्नाविति चेद् न । तत्त्वज्ञानस्य प्रतिबन्धकलक्षणरहितत्वात् । सति हि पुष्कलकारणे कार्योत्पादविरोधितया जायमानं प्रतिबन्धकं तत्त्वज्ञानं त्वसत्येव काचकामलादिदोषाख्ये ऽध्यासपुष्कलकारणे जायतइति लक्षणरहितं तथापि तत्त्वज्ञानस्याध्यासविरोधितया विरोधिसंसर्गाभावविषयत्वेनापि तावुपपत्स्येते इति चेद् न । कार्यस्य तावदुपादानापेक्षा प्रथममुत्पद्यते पश्चाद्विरोधिसंसर्गाभावापेक्षा तथा चान्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति न्यायेनान्तरङ्गोपादानविषयत्वमेव तयोर्न्याय्यम् । प्रध्वंसवदुपादानापेक्षैव मा भूदिति चेद् विमतं सोपादानं भावत्वे सति कार्यत्वाद् घटव*दित्यनुमानात् । ननु पटगुणे रूपे ऽनैकान्तिको हेतुः । न हि तस्योपादानं संभवति । तस्य किं पट एवोपादानं द्रव्यान्तरं वा । नाद्यः । सव्येतरयोर्विषाणयोरिव युगपदुत्पन्नयोः कार्यकारणभावानुपपत्तेः । द्वितीये द्रव्यान्तरगतत्वेन पटगुणत्वहानिरिति । मैवम् । तार्किकमते तावदुत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति न्यायेन यौगपद्याभावात् पटस्यैवोपादानत्वसंभवः । वेदान्तिमते तु तन्तूनामुपादानत्वे ऽपि कार्यकारणयोरभेदात् पटगुणत्वं न हीयते । न च काचादिदोषाणामुपादानत्वसंभवे ऽपि किमनेनाज्ञानेनेति वाच्यम् । अध्यासतदुपादानयोरेकाश्रयत्वनियमात् । इह त्वध्यास आत्माश्रितो दोषाश्चेन्द्रियाद्याश्रिता† इति नोपादानत्वं तेषाम् । ननु रजताध्यासः शुक्त्याश्रितः‡ प्रतीयते तदुपादानं त्वज्ञानमात्माश्रितमिति त्वन्मते ऽपि नैकाश्रयत्वसिद्धिः । मैवम् । आत्माश्रितस्यैवाध्यासस्य शुक्तिसंसर्ग इत्युपपादयिष्यमाणत्वात् ॥

ननु तर्हि अर्थाध्यासस्याज्ञानमुपादानमस्तु ज्ञानाध्यासस्य त्वात्मा ऽन्तःकरणं चोपादानं भविष्यति । सम्यग्ज्ञानेषु मतभेदेन तयोरुपादानत्वादिति चेद् मैवम् । आत्मनो ऽपरिणामित्वात् । अन्तःकरणस्य चेन्द्रियसंयोगलिङ्गादिसापेक्षत्वात् । न ह्यत्र संयोगादिः संभवति । मिथ्यापदार्थस्य प्रत्ययमात्रशरीरस्य प्रत्ययात्प्रागसिद्धेः केनेन्द्रियं संयुज्येत । इन्द्रियान्वयव्यतिरेकौ तु भ्रान्तिज्ञानस्याधिष्ठानज्ञानविषयतया ऽन्यथासिद्धौ । न चाधिष्ठानज्ञानसंप्र-

---

* घटादिवदिति २ पु॰ पाठः । † दोषाश्चेन्द्रियाद्याश्रया इति २ पु॰ पाठः ।
‡ शुक्त्यादिगत इति २ पु॰ पाठः ।

योगादेव भ्रान्ति * ज्ञानोत्पत्तिसिद्धिः । मिथ्यार्थसंप्रयोगाभावे तत्प्रतीत्यनुपपत्तेः । न च संस्कारोपनीततया सो ऽयं देवदत्त इति प्रत्यभिज्ञायां तत्तांशवत्तत्प्रतीतिः । तद्वदेवाभ्रान्तत्वापत्तेः । न चाधिष्ठानसंसर्गांशस्यासत्त्वाद् भ्रान्तत्वम् । तर्हि तस्यासत्त्वेन संप्रयोगाऽयोग्यस्यारोप्यस्यापरोक्षत्वाभावप्रसङ्गात् । ननु मिथ्यार्थे ऽन्तःकरणमिन्द्रियसंप्रयोगं नापेक्षते । विनापि तेन स्वप्नज्ञानदर्शनादिति चेत् तथाप्यन्तःकरणस्य ज्ञानाकारपरिणामे ज्ञातृत्वशून्यत्वाद् मिथ्यार्थव्यवहारो न सिध्येत् । अथान्तःकरणमेव जडमपि ज्ञानकर्तृत्वाकारेण परिणंस्यते आत्मा वा ज्ञाता भविष्यतीति मन्येथाः एवमपि भ्रान्तिसम्यग्दर्शनबन्धनिवृत्तीनामेकाश्रयत्वनियमादन्तःकरणस्य भ्रान्तत्वे तस्यैव सम्यग्दर्शनबन्धनिवृत्ती प्रसज्येयाताम् । इष्यते त्वात्मन एव भ्रान्तत्वादिकं तच्चात्माश्रिताज्ञानोपादानत्वपक्षे सिध्यति नान्यथा । तस्मादज्ञानमेवोपादानं परिशिष्यते ॥

न चाज्ञाने विवदितव्यम् । अहमज्ञो मामन्यं च न जानामीति प्रत्यक्षेण जडात्मिकाया अविद्याशक्तेरात्मानमाश्रित्य बाह्याध्यात्मिकेषु व्याप्राया अनुभूयमानत्वात् । ननु ज्ञानाभावविषयो ऽयमनुभवः । तन्न । अहं सुखीतिवदपरोक्षानुभवत्वात् । अभावस्य च षष्ठप्रमाणगम्यत्वात् । प्रत्यक्षाभाववादे तु धर्मिप्रतियोगिनोरात्मज्ञानयोः प्रतीतौ मयि ज्ञानं नास्तीति एतादृशं ज्ञानाभावप्रत्यक्षं व्याहन्येत । तयोरप्रतीतौ च हेत्वभावादेव तत्प्रत्यक्षानुत्पादः † । ननु सर्वत्र व्यवहारो ज्ञानस्य फलत्वेन लिङ्गं भवति । तल्लिङ्गाभावेन ज्ञानाभावो ऽनुमीयते इति चेद् न । तदापि धर्म्यादिप्रतीत्यप्रतीत्योरुक्तदोषात् । षष्ठमानगम्यो ज्ञानाभाव इति भट्टमते ऽपि अयमेव दोषः । अस्मन्मते तु साक्षिवेद्यो ज्ञानमात्राभावः । ज्ञानविशेषाभावस्तु व्यवहारे भट्टनयइत्यभ्युपगमेन षष्ठमानगम्यः । यदा तु मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततो ऽणुरिति पुराणमतमाश्रित्याभावपदार्थ एव नाङ्गीक्रियते तदा न कापि चिन्ता । ननु भावरूपाज्ञानस्यापि ज्ञाननिवर्त्यत्वाङ्गीकारादहमज्ञ इत्याद्याश्रयविषयप्रतीतिगर्भितमज्ञानप्रत्यक्षं व्याहतमेव । मैवम् । आश्रयविषयाज्ञानानि त्रीण्यपि एकेनैव साक्षिणा ऽवभास्यन्ते । तथा चाश्रयविषयौ साधयन्नयं साक्षी तद्ग-

* अधिष्ठानसंप्रयोगाद् भ्रान्तीति २ पु· पाठः । † तत्प्रत्यक्षाऽनुदय इति २ पुस्तके ।

देवाज्ञानमपि साधयत्येव न तु निवर्तयति । तन्निवर्तकं त्वन्तःकरणवृत्तिज्ञानमेव । तच्चात्र नास्तीति कथं व्याहतिः । नन्वहं घटं न जानामीत्यत्राज्ञानव्यावर्तको घटो न तावत्संबन्धरहितेन साक्षिणा प्रत्येतुं योग्यः । बाह्यविषयसिद्धेः * स्वसंबद्धप्रमाणायत्तत्वात् । नापि प्रमाणेन प्रमाणनिवर्त्यत्वादज्ञानस्येति चेत् सत्यम् । केवलस्य घटस्य साक्षिवेद्यत्वाभावे ऽपि अज्ञातत्वधर्मविशिष्टस्याज्ञानद्वारा संबन्धवता साक्षिणा प्रतीतिरुपपद्यत एव । न च वाच्यं केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि तदनुपपन्नं रसादेश्चाक्षुषद्रव्यविशिष्टस्यापि चाक्षुषत्वादर्शनादिति । परमाणोः केवलस्य मानसप्रत्यक्षत्वाभावे ऽपि † परमाणुमहं जानामीति ज्ञानविशेषणतया मानसप्रत्यक्षविषयत्वस्य परैरङ्गीकारात् । लोके ऽपि राहोः केवलस्याप्रत्यक्षत्वे ऽपि चन्द्राद्युपरक्तस्य प्रत्यक्षत्वदर्शनात् । परमते ऽपि घटमहं न जानामीत्यत्र ज्ञानाभावविशेषणस्य घटस्य प्रतीत्यप्रतीत्योर्दूषणस्याभिहितत्वात् । तस्मात्सर्वं वस्तु ज्ञाततया ऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव । ननु तर्हि ज्ञाताज्ञातविषयभेदो न स्यात् तथा प्रमाणव्यापारवैयर्थ्यं तदन्वयव्यतिरेकविरोधश्चेति चेद् मैवम् । यद्वदज्ञानमज्ञातत्वधर्मं स्वविषये संपाद्य तस्य साक्षिणा संबन्धं घटयति तद्वत्प्रमाणमपि ज्ञातत्वं धर्मं ‡ स्वविषये संपाद्य तस्य साक्षिणा संबन्धघटकमित्यङ्गीकारेणोक्तदोषनिवृत्तेः । तदेवमुक्तोपपत्तिसहितमहमज्ञ इति प्रत्यक्षं भावरूपाज्ञाने प्रमाणम् ॥

तथाप्यनुमानैकरुचिं प्रति § तदप्युच्यते प्रत्यक्षवदुपपत्त्यपेक्षां विना साक्षादेव भावरूपत्वसाधनाय ‖ । विमतं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति अप्रकाशितार्थप्रकाशकत्वाद् अन्धकारे प्रथमोत्पन्नप्रदीपप्रकाशव ¶ दिति । ज्ञानमात्रस्य पक्षत्वे**त्वनुवादज्ञाने हेत्वसिद्धिः स्यादिति प्रमाणेत्युक्तम् । तथा धारावाहिकव्यावृत्तये विमतमिति । वस्तुपूर्वकमित्येवोक्ते स्वाश्रयेणात्मादिना सिद्धसाधनता स्याद् अतो वस्त्वन्तरेत्युक्तम् । तथा स्वाश्रयातिरिक्तसामग्रीं धर्मादिकं पूर्वज्ञानं प्रागभावं चा-

* बाह्यविषयसिद्धेरिति २ पु॰ पाठः ।
† मानसप्रत्यक्षताभावेऽपीति १ पु॰ पा॰ ।
‡ ज्ञातत्वधर्ममिति २ पु॰ पाठः ।
§ तथा अनुमानैकरुचिमिति १ पु॰ पाठः ।
‖ भावरूपप्रसाधनायेति १ पु॰ पाठः ।
¶ प्रदीपप्रभावदिति २ पु॰ पाठः ।
** ज्ञानमात्रपक्षीकारे त्विति २ पु॰ पाठः ।

वरोहक्रमेण * स्वदेशेत्यादिविशेषणचतुष्टयेन निवर्तयति । एतावता च विवक्षितविशेषं भावरूपाज्ञानं सिध्यति । धारावाहिकज्ञानेषु व्यभिचारं वारयितुम् अप्रकाशितेति । धारावाहिकप्रभासूभयवैकल्यं वारयितुं प्रथमेति । आतपवति देशे समुत्पन्नदीपप्रभायां तद्वारयितुमन्धकारे इति । अनिर्वचनीयस्य ज्ञानार्थरूपद्विविधाध्यासस्या†न्यथानुपपत्त्या तदुपादानस्याज्ञानस्यानिर्वचनीयत्वम् । न चान्यथाप्युपपत्ति‡स्तस्य सत्यत्वे तत्कार्यस्यापि सत्यत्वप्रसङ्गात् । तथा च मूलकारणत्वान्यथानुपपत्त्या ऽनादित्वम् । सादित्वे चोपादानपरंपरापेक्षायां मूलकारणं न सिध्येत् । तदेवमनाद्यनिर्वाच्यभाव§रूपाज्ञानमात्माश्रितमात्मविषयमध्यासस्योपादानमिति सिद्धम् ॥

ननु किमिदमज्ञानमात्मानमिवानात्मानमप्यावृणोति किं वा नावृणोति । नाद्यः । प्रमाणप्रयोजनयोरभावात् । तथा हि । इदं नीलमज्ञानेनावृतमिति प्रमाणेन ग्रहीतव्यं तच्च नीलप्रतीत्यप्रतीत्योर्न संभाव्यते । अथ मन्यसे नीलावगतिकालएवाज्ञानावरणासंभवे ऽपि नीलावगतेः पूर्वकालीनमावरणं गम्यतएवेति । तन्न । गमकानिरूपणात् । किमिदानीमवगतत्वं गमकं किं वा तदेवेदं नीलमिति प्रत्यभिज्ञान्यथानुपपत्तिः आहो स्विदभिज्ञाप्रत्यभिज्ञयोर्मध्ये ज्ञातस्मृत्यभावान्यथानुपपत्तिः । नाद्यः । धारावाहिकज्ञानेषु पूर्वमवगतस्यैव पश्चादप्यवगमेन पूर्वकालीनावरणं विनैवेदानीमवगतत्वसंभवात् । न द्वितीयः । अन्योन्याश्रयत्वात् पूर्वावरणसिद्धाविदानीमेवेत्यवधारणसिद्धिस्तत्सिद्धावितरसिद्धिरिति । न तृतीयः । अभिज्ञाय कं चित्कालं विस्मृतस्यैव प्रत्यभिज्ञेति नियमाभावात् । सर्वदा स्फुरत्यप्यात्मनि सो ऽहमिति प्रत्यभिज्ञानदर्शनात् । न चतुर्थः । अभिज्ञाप्रत्यभिज्ञयोर्मध्ये ऽप्यावरणविरहितत्वेनोत्पन्नानामेव ज्ञानानां स्मृत्यभाव इत्यपि सुवचत्वात् । न हि यद्यदनुभूतं तत्तत्स्मर्यतएवेति नियमो ऽस्ति । न च वाच्यं त्वदुक्तमर्थं न जानामीति विषयसंबन्ध्यज्ञानमनुभूयते संबन्धश्चाज्ञानस्यावरणत्वेनात्मनि दृष्टस्तत्कथमपलप्यतइति । साक्षिचैतन्येन स्वस्मिन्नध्यस्तानामज्ञानविषयतत्संबन्धानामनुभवाङ्गीकारात् । संबन्धश्चाज्ञानविषययोः

---

* आरोहावरोहक्रमेणेति १ पु· पाठः । † द्विविधाऽध्यासस्य कार्यस्येति २ पु· पाठः ।
‡ न चान्यथोपपत्तिरिति २ पु· पाठः । § अनाद्यनिर्वचनीयभावेति २ पु· पाठः ।

